मञ्जरिका — (क) हला, अवि संवुत्तो भट्टिदारिआणं मण्डवीसुदकित्तीणं वि विआहमहूसवो ?

मञ्जूषिका — (ख) अह इम् ।

मञ्जरिका — (सहर्षम्) (ग) दिट्ठिआ दिण्णाणं पि राअकण्णआणं जहपुरुवं एक्कघरम्मि सहावट्ठाणसुहं संवुत्तम् ।

मञ्जूषिका[1] — (घ) एव्वं एदम् । ताओ खु अणुरूवभत्तुलाहादो[2] सोहग्गादिसअं अणुहोन्ति । तह हि—

सीआ बीआव लच्छी जह णवमिहआसामले रामअंदे
संसत्ता उम्मिला सा तह सुहअमहालक्खणे लक्खणे वि ।
एव्वं भव्वाणुभावे रमइ खु भरहे मण्डवी पुण्णभाआ
सत्तुग्घे सत्तभावा विलसइ सुदकित्ती अ कित्तीअ पत्तम् ॥ १ ॥

---

(क) हला, अपि संवृत्तो भर्तृदारिकयोर्माण्डवीश्रुतकीर्त्योरपि विवाहमहोत्सवः ?

(ख) अथ किम् ।

(ग) दिष्ट्या दत्तानामपि राजकन्यकानां यथापूर्वमेकगृहे सहावस्थानसुखं संवृत्तम् ।

(घ) एवमेतत् । ताः खलु अनुरूपभर्तृलाभात् सौभाग्यातिशयमनुभवन्ति । तथा हि—

सीता द्वितीयेव लक्ष्मीर्यथा नवमेघश्यामले रामचन्द्रे
संसक्तोर्मिला सा तथा सुभगमहालक्षणे लक्ष्मणेऽपि ।
एवं भव्यानुभावे रमते खलु भरते माण्डवी पूर्णभाग्या
शत्रुघ्ने सक्तभावा विलसति श्रुतकीर्तिश्च कीर्तेः पात्रम् ॥ १ ॥

---

१. वा — हला, एव्वं. क.

२. लाहेण. क.

मञ्जरिका — (क) मञ्जूसिए, सुलहप्पच्चूहो वि समीहिदत्थो पच्चूहं विणा पडिवण्णो त्ति संपअं भणिदव्वम् ।

(नैपथ्ये)

भो भो ! निवेद्यतां निवेद्यतां महाराजसीरध्वजाय ।

कठोरास्थिग्रन्थिस्थपुटनृपवक्षःस्थलवल-
त्कुठारो निःक्षत्रामकृत बहुधा यो वसुमतीम् ।
उदञ्चत्क्रौञ्चाद्रिच्छिदुरशरहेलाजितगुहो
महात्मा सक्रोधः सपदि समुपायाति स मुनिः ॥ २ ॥

उभे — (श्रुत्वा सत्रासम्) (ख) हा ! किं एदं भवे ।

(पुनर्नेपथ्ये)

वदत वदत क्वासौ क्वासौ दिलीपकुलाङ्कुरो
विनयविमुखो वीरम्मन्यो विमोहघनो बटुः ।
मम खलु गुरोश्शम्भोर्हे मोश्शरासमभिन्त यः
[1]कुनृपतिकुलोच्छेदोच्छूनं कुठारमचिन्तयन् ॥ ३ ॥

(प्रविश्य सम्भ्रान्तः)

काञ्चुकीयः — भवत्यौ किमिदानीमपि इह परिवर्तेथे ।

---

(क) मञ्जूषिके, सुलभप्रत्यूहोऽपि समीहितार्थः प्रत्यूहं विना प्रतिपन्न इति साम्प्रतं भणितव्यम् ।

(ख) हा ! किमेतद् भवेत् ।

---

१. 'कुलपतिकुलोच्छे' ब.

आकर्ण्य कर्णपरुषं गुरुचापभङ्ग-
माघूर्णितो बत रुषा नृपवंशवैरी।
उद्दामराशनिकठोरकुठारपाणि-
राधावति स्वयमयं खलु जामदग्न्यः ॥ ४ ॥

उभे — (क) अय्य, परित्ताआहि परित्ताआहि।

काञ्चुकीयः — के वयं परित्रातुम्। स्वभावभीरूणां राजदारिकाणाम् अकाण्डाशनिपातकल्पमिदमवस्थान्तरमुपलभ्य[1] संभ्रमातिरेको यथा न स्यात्तथा प्रयतितव्यं भवतीभ्याम्।

(पुनर्नेपथ्ये)

रामो राम इति द्विषां विरमणाद् यन्नाम नः सार्थकं
व्यर्थं हन्त तदेव यः किल बिभर्त्यद्यापि खद्योतवत्।
तस्मिन् क्षत्रियडिम्भके मम पुरैवोत्थं हि वैराङ्कुरं
सद्यः पल्लवयत्यदो गुरुधनुर्भङ्गाभिधं दोहलम् ॥ ५ ॥

काञ्चुकीयः — त्वरेतां[2] त्वरेतां भवत्यौ। प्रत्यासन्नः स भगवान्नृपतिकुलशलभहुताशनपरशुः परशुरामः।

उभे — (ख) कोसल्लादिदसरहपदिणीतिदअसणाहं णवुव्वहणसुलहलज्जामणहरराअदारिआचउक्कपुक्खलसोहं अंतेउरं पविसामो। (इति निष्क्रान्ते।)

---

(क) आर्य, परित्रायस्व परित्रायस्व।

(ख) कौसल्यादिदशरथपत्नीत्रितयसनाथं नवोद्वहनसुलभलज्जामनोहरराजदारिकाचतुष्कपुष्करशोभमन्तःपुरं प्रविशावः।

---

1. 'निकल्पमिद' ख.
2. 'त्वरतां त्वरतां भवत्यौ' घ.

काञ्चुकीयः — अहमपीमं वृत्तान्तमुपलब्धुं महाराजसमीपमेव गच्छामि[1]। (इति निष्कान्तः[2]।)

॥ इति प्रवेशकः ॥

---

(ततः प्रविशन्ति कौसल्याकैकेयीसुमित्रा वध्वश्च)

कौसल्या — (सीतामालिङ्ग्य) (क) पुत्ति जाणइ, तुवं खु बहिणिआहिं समं चिअ रहूणं वहू जाआसि त्ति अहो अह्माणं भाअहेअपरिवाओ।

(सीता लज्जते।)

कैकेयी — (ख) अय्ये, अरहिअमहुरालावकोसल्ले कोसल्ले, अतिलज्जाल्लणीओ एदा भणिदाओ जह वाआनिस्सणे पहविस्संति तह इमाओ अणुणेहि।

सुमित्रा — (ग) अय्ये केअइ, कंचिक्कालं खमेसु। णहु माहवीलदाओ[3] उब्भिण्णमत्तो पल्लवाइ दंसअंति।

---

(क) पुत्रि जानकि, त्वं खलु भगिनीभिः सममेव रघूणां वधूर्जातासीति अहो अस्माकं भागधेयपरिवाहः।

(ख) आर्ये अरहितमधुरालापकौशल्ये कौसल्ये, अतिलज्जाशालिन्य एता भणिता यथा वाक्प्रिश्रणे प्रभविष्यन्ति तथेमा अनुनय।

(ग) आर्ये कैकेयि, कञ्चित् कालं क्षमस्व। न खलु माधवीलता उद्भिन्नमात्रे पल्लवानि दर्शयन्ति।

---

१. 'मि। निष्क्रा' क.

२. 'न्तः। प्रवेशक.' प.

३. 'हविल' म. 'हविल्लदाओ' प.

सीता — (स्वगतम्) (क) अम्मो महुरभासिणीओ एदाओ ठाणे खु इमाओ रहुराअपुरंधित्तणं अणुहोन्ति । अह वा महाणईओ महोअहिं वज्जिअ कहिं अण्णस्सिं विस्समन्ति ।

माण्डवी — (ऊर्मिला प्रत्यपवार्य) (ख) वच्छे उम्मिले ! इय खु सच्चेअ सीआ । जा किल,

रूपजोव्वणगुणेहिं मणोज्ज राइव सुणिअ कोउहलिल्ली ।
केच्चिर विरहमप्पसहती समुत्तीअ सविसेसकिसगी ॥ ६ ॥

ऊर्मिला — (अपवार्य) (ग) अय्ये, एव्व एदम् ।

अल्लिऊण भिसिणीदलसेज्ज दज्जिआ मअणवाणसिहीहिं ।
कतिमत्तपरिसेसिअगत्ता जा भुवीअ पढमेंदुकलाव ॥ ७ ॥

---

(क) अम्मो मधुरभाषिण्य एताः । स्थाने खल्विमा रघुराजपुरन्ध्रीत्वमनुभवन्ति । अथ वा महानद्यो महोदधिं वर्जयित्वा क्वान्यत्र विश्राम्यन्ति ।

(ख) वत्से ऊर्मिले, इय खलु सैव सीता । या किल,

रूपयौवनगुणैर्मनोज्ञं राघवं श्रुत्वा कौतूहलवती ।
कियच्चिरं विरहमप्रसहमाना समभूत् सविशेषकृशाङ्गी ॥

(ग) आर्ये, एवमेतत् ।

आश्रित्य बिसिनीदलशय्यां दग्धा मदनबाणशिखीभिः ।
कान्तिमात्रपरिशिष्टगात्री याभूत् प्रथमेन्दुकलेव ॥

माण्डवी — (क)

णिअकुसुमकुअंडदाहकोहक्खुहिअमणो कुसुमाउहो खु एसो।
विदलइ विसमेक्खणस्स चावं धुवमुपज्जुज्जइ वेरणिक्खओ से। ॥ ८ ॥

[१]इअ रहसि भणीअ जाणई मं दलिअधणुं पुलऊण रामअंदं
अह रहुतणओ त्ति जाणई णं पुलअवई विणमेइ वचाविंवम् ॥ ९ ॥

तदप्पहुदि परिगहिअं लज्जालुणिचणं अज्ज वि दाव उज्जुआ एसा ण परिचेदि।

श्रुतकीर्तिः — (अपवार्य) (ख) अय्याओ, तुह्मे किं मंतेह ?

माण्डवी — (अपवार्य) (ग) वच्छे सत्तुग्घघरिणि, तुह सोहग्गं उद्दिसिअ अह्मे किं पि पसंसामो।

(श्रुतकीर्ति सकोपं पराङ्मुखी तिष्ठति।)

---

(क) निजकुसुमकोदण्डदाहक्रोधक्षुभितमनाः कुसुमायुधः खल्वेषः।
विदलयति विषमेक्षणस्य चापं ध्रुवमुपयुज्यते वैरनिष्क्रयोऽस्य ॥
इह रहसि भणित्वा जानकीमं दलितधन्वानं प्रलोक्य रामचन्द्रम्।
अथ रघुतनय इति जानत्येनं पुलकवती व्यनमयत् वक्त्रबिंबम् ॥

तदा प्रभृति (परि)गृहीतं लज्जालुत्वमद्यापि तावदृज्वी एषा न परित्यजति।

(ख) आर्ये, युवां किं मन्त्रयेथे।

(ग) वत्से शत्रुघ्नगृहिणि, तव सौभाग्यमुद्दिश्यावां किमपि प्रशंसावः।

---

१. 'इह' ग.

ऊर्मिला — (विहस्यापवार्य) (क) मुग्धे, अलं कोवेण ।

अणुरूअभत्तुलाहो सफलेइ खु अम्मकाणणिम्माणं
असरिसपुरिसाहिगमो सल्लं णो एक्कमामरणं ॥ १० ॥

श्रुतकीर्तिः[1] — (अपवार्य) (ख) जुत्तमिणं ।

सरिसपुरिसलाहगव्विरं वो
मणमिणमण्णअणोपहासवाआ ।
अदिफुडअस्मासि सेउभंगाविअ
णिअपूरभरो जलासआणम् ॥ ११ ॥

कौसल्या (जनान्तिकम्) (ग) वहिणिआओ,

सोह्णा जोह्णाविसअसुसमासंदणिस्संदएहिं
सव्वाणंदं समअमसुआ जोव्वणं उव्वहंति ।

---

(क) मुग्धे, अलं कोपेन ।

अनुरूपभर्तृलाभस्सफलयति खल्वस्मादृशीनां निर्माणम् ।
असदृशपुरुषाधिगमश्शल्यं न एकमामरणम् ॥

(ख) युक्तमिदम् ।

सदृशपुरुषलाभगर्वशीलं वा मन इदमन्यजनोपहासवाचा ।
अतिस्फुटमासीत् सेतुभङ्गादिव निजपूरभरो जलाशयानाम् ॥

(ग) भगिन्यो,

स्नुषा ज्योत्स्नाविशदसुषमासान्द्रनिष्यन्दैः
सर्वानन्दं सममसूर्यौकनं उद्वहन्ति ।

---

१. 'ति.' — 'जुत्तमिणम्' म.

लोलाग्गीलावलिअललिआ[1] भंगचंगा अवंगा
जाणं णूणं हिअअणिहिअं वम्महं वाहरन्ति ॥ १२ ॥

कैकेयी — (जनान्तिकम्) (क) अय्ये, एवमेदम् ।

वक्कावंगतरंगणाइ भुमआकल्लोलहल्लोहलो
वेअड्ढीपरिवुड्ढसारसरसं जं किं पि संजप्पिअम् ।
वीलाजंतणबंधुरं सुमहुरं सीलं च लीलंचिअं
ताहे होन्ति ण कण्णआण ण ठिअं जाहे णवं जोव्वणम् ॥ १३ ॥

सुमित्रा — (जनान्तिकम्) (ख) अणिदं अय्या[2] भणादि ।

मणवसइमणोभूवामहत्थट्ठिएण
णवकुसुममयेणं चावदंडेण साहम् ।

---

लोलाग्रीलावलितललिता भंगचंगा अपाङ्गा
यासां नूनं हृदयनिहितं मन्मथं व्याहरन्ति ॥

(क) आर्ये, एवमेतत् ।

वक्रापाङ्गतरङ्गणानि भ्रू(महा)कल्लोलहल्लोहलो
वैदग्ध्यपरिवृद्धसारसरसं यत्किमपि सञ्जल्पितम् ।
व्रीलायन्त्रणबन्धुरं सुमधुरं शीलञ्च लीलान्चितं
तावद्भवन्ति न कन्यकानां न स्थितं यावन्नवं यौवनम् ॥

(ख) अधिनयार्या भणति ।

मनोवसतिमनोभूवामहस्तस्थितेन
नवकुसुममयेन चापदण्डेन सार्धम् ।

---

१. 'ओला' ब.
२. 'अय्याओ भणन्ति'

णअणवअणचिल्लीवल्लिधम्मिल्लआणं
कुणइ कुडिलिमाणं[1] जोव्वणं जोव्वणाणम् ॥ १४ ॥

(प्रविश्य)

मञ्जरिका — (सर्वा विलोक्य स्वगतम्) (क) दिट्ठिआ इह ण पविट्ठो सो अच्चाहिदवुत्तंतो। होदु, दाव ण पआसइस्सं जाव गहिदत्था ण आअमिस्सिदि मंजूसिआ। (उपसृत्य) देवीओ, पणमामि।

कौसल्या — (ख) भद्दे! मञ्जरिए, एहि एत्थ उपविस।

मञ्जरिका — (ग) जं देवी आणवेदि। (तथा करोति।)

सीता — (घ) हंजे[2] मञ्जरिए, कहिं मञ्जूसिआ?

---

नयनवचनचिल्लीवल्लिधम्मिल्लाना
करोति कुटिलिमानं यौवन यौवनानाम् ॥

(क) दिष्ट्येह न प्रविष्टस्सोऽत्याहितवृत्तान्तः। भवतु, तावत्र प्रकाशयिष्यामि यावत् गृहीतार्था नागमिष्यति मञ्जूषिका। देव्य, प्रणमामि।

(ख) भद्रे मञ्जरिके, एह्यत्रोपविश।
(ग) यद् देवी आज्ञापयति।
(घ) हञ्जे मञ्जरिके, क्व मञ्जूषिका?

---

१. 'माणा' ग.
२. 'अज्जे' ख.

मञ्जरिका — (क) अणुपदं आअमिस्सिदि ।

मञ्जूपिका — (प्रविश्य) (ख) सहि मञ्जरिए, सव्वं सोहणपरिणामं सं-वुत्तम् ।

कौसल्या — (ग) किं असोहणं जाअं ?

मञ्जूपिका — (घ) किं ण विदिओ तुह्मेहिं सो वुत्तंतो ?

कैकेयी — (साशङ्कम्) (ङ) णहि णहि[1] भणेहि[2] कीरिसो सो ।

मञ्जूपिका — (च) सहि मञ्जरिए, तुए वि ण णिवेदिओ ?

मञ्जरिका — (छ) सहि, मये[3] खु तुह आअमणं पडिवाल[4]अंतीए तुह्णीं चेअ ठिअम् ।

---

(क) अनुपदमागमिष्यति ।

(ख) सखि मञ्जरिके, सर्वं शोभनपरिणामं संवृत्तम् ।

(ग) किमशोभनं जातम् ?

(घ) किं न विदितो युष्माभिः स वृत्तान्तः ?

(ङ) न हि न हि भण कीदृशः सः ।

(च) सखि मञ्जरिके, त्वयापि न निवेदितः ?

(छ) सखि, मया खलु तवागमनं प्रतिपालयन्त्या तूष्णीमेव स्थितम् ।

---

१. 'हि कीरिसो' क.

२. 'भण कीरिसो' ख. ग. घ.

३. 'यं सि' ख. ग. घ.

४. 'अंताए' घ.

सुमित्रा — (क) तुरिअं भणेह ।

मञ्जूषिका — (ख) ता असंभंता सुणह । णिअगुरुसरासणभंगवुत्तंतं सुणिअ कुविअहिअओ भअवंतो भग्गवो जणअदसरहउलाइ कुठारपावए भस्सीकादुं पाढत्तो परुसवअणेहिं पराभूदपत्थिवलोओ आअदो ।

सर्वाः — (सभयकम्पम्) (ग)संतं सन्तं पात्रं । हाहा ! खत्तिअउलणिसग्ग-सत्तू सो महेसी ।

मञ्जूषिका — (घ) अप्पमत्ता होह । सो खु महेसी,

करगहिअमरासवाणसेणीणिसिअपरस्सहदुःसहप्पआवो ।
जणअदसरहाण वंसधंसं कुणउ कुठारवरो चि कत्थमाणो ॥ १५ ॥

सर्वाः — (ङ) हा हा ! किं भविस्सिदि[1] ।

(क) त्वरितं भणतम् ।

(ख) तदसम्भ्रान्ताः शृणुत । निजगुरुशरासनभङ्गवृत्तान्तं श्रुत्वा कुपितहृदयो भगवान् भार्गवो जनकदशरथकुलानि कुठारपावके भस्मीकर्तुं प्रारब्धः परुषवचनैः पराभूतपार्थिवलोक आगतः ।

(ग) शान्तं शान्तं पापम् । हा हा ! क्षत्रियकुलनिसर्गशत्रुः स महर्षिः ।

(घ) अप्रमत्ता भवत । स खलु महर्षिः,

करगृहीतशरासबाणश्रेणीनिशितपरश्वधदुःसहप्रतापः ।
जनकदशरथयोर्वंशध्वंसं करोतु कुठारवर इति कत्थमानः ॥

(ङ) हा हा ! किं भविष्यति ।

1. 'दि' । तदो तदो. म.

मञ्जूषिका — (क) किं बहुजप्पिएण।

रुट्ठो सो दिट्ठमत्तो विहिअपणइणा रामभद्देण जाहे
कोहादो चाडुआआ वि ण विहडइदुं पारिओ दारुणो सो।
ताहे तत्तो खु लद्धं गरुलधअधणुं कड्ढमाणेण णेणं
तेएहिं वेह्नवेहिं सह समहिगओ तक्खणं तप्पसाओ ॥ १६ ॥

(सर्वा हर्षं नाटयन्ति।)

सुमित्रा — (ख) अय्याओ, पेच्छह अच्छेरं,

असणिद्धणिघोसभीसिआओ तरसाणंतरविट्ठितोसिआओ।
जह होन्ति खणम्मि मोरिआओ तह होमो सह लद्धतासतोसा ॥ १७ ॥

(ततः प्रविशति जनकः।)

जनकः — (सानन्दम्)

---

(क) किं बहुजल्पितेन।

रुष्टस्स दृष्टमात्रो विहितप्रणतिना रामभद्रेण यावत्
क्रोधात् चाटुवाचापि न विघटयितुं पारितो दारुणः सः।
तावत्ततः खलु लब्धं गरुडध्वजधनुः कर्षमाणेन
तेजोभिर्वैष्णवैस्सह समधिगतस्तत्क्षणं तत्प्रसादः॥

(ख) आर्ये, पश्यतमाश्चर्यम्,

अशनिध्वनिघोषभीषितास्तरसानन्तरदृष्टितोषिताः।
यथा भवन्ति क्षणे मयूरिकास्तथा भवामस्सह लब्धत्रासतोषाः॥

संबन्धो रघुभिर्नृपैरलघुभिः सम्यक् समापादितो
दूरं दुर्घटतोऽपि शुल्कजलधेरुत्तारिताः स्मो वयम् ।
सक्रोधं समुपागतोऽपि गमितः शान्तिं भृगूणां पतिः
सर्वेऽर्थाः समुपाहिताः सुनिहितक्षेमेण रामेण नः ॥ १८ ॥

कोऽत्र भोः ।

(प्रविश्य)

काञ्चुकीयः — आज्ञापयतु महाराजः ।

जनकः — भद्र मन्दारक ! अन्तःपुरं प्रवेष्टुमिच्छामि । तद् ज्ञायतां कस्तत्रावसर इति ।

काञ्चुकीयः — यदाज्ञापयति महाराजः । (निष्क्रम्यान्तःपुरं प्रविश्य) भो महादेव्यः !, महाराजसीरध्वजोऽयमन्तःपुरं प्रवेष्टुमागच्छति ।

कौसल्या — (क) बहिणिआओ, अह्मे अण्णदो गच्छह्म ।

(इति तिस्रो निष्क्रान्ताः ।)

काञ्चुकीयः — (राजानमुपेत्य) प्रविशतु महाराजः ।

(निष्क्रान्तः ।)

(जनकः परिक्रम्यान्तःपुरं प्रविशति ।)

सीता — (अन्याभिस्सहोत्थाय) (ख) ताद, पणमामो ।

जनकः — (ताः सस्नेहमालिङ्ग्य, सबाष्पगद्गदम्) हे पुत्र्यः !

---

(क) भगिन्यौ, वयमन्यतो गच्छामः ।

(ख) तात, प्रणमामः ।

चतस्रः संसक्ताः सततमपि भूयास्त पतिभि-
श्चतुर्भिस्तैरथैरभिमततमैः सिद्धय इव ।
अमीभ्यः सन्तोषानिव समभिगम्यास्त तनया-
न्नितो नो पश्यामः किमपि वयमाशास्यमपरम् ॥ १९ ॥

(सर्वाभिस्सहोपविश्य) पुत्रि जानकि !

प्रत्यग्धामनि कामचारविषयादष्टांगयोगाङ्कुशे-
नाकृष्य प्रतिबध्नतामपि सतामुच्चैर्मनोवारणम् ।
तोकं नाम यदेकमस्ति तदलं मोहाय वस्त्वन्तरं
ब्रह्मज्ञस्य ममापि मज्जति यतश्चेतो ममत्वाम्बुधौ ॥ २० ॥

(सीता रोदिति ।)

जनकः —

बाले, प्रालेयवर्षैरिव नवकमलं निष्प्रभं बाष्पतोयै-
र्जातं शीतेतरैस्ते वदनमिदमहो किं मुधा रोदिषि त्वम् ।
दैवात्तीर्णप्रतिज्ञा वयमितरवधूदुर्लभो वल्लभस्ते
संबन्धः सूर्यवंश्यैः किमपरममुतः प्रीतये भूतये च ॥ २१ ॥

(सीता सलज्जमधोमुखी तिष्ठति ।)

जनकः — पुत्रि भाण्डवि,

भवतु जनुषो हेतुः कामं कुमारकुशध्वज-
स्तव तु निहितेराहतारो वयं खलु राघवे ।

१. 'वि' ख. घ. ब.
२. 'राहतारो' क. घ. 'राहतारो' ख. ब.

यदपि जलधिर्जन्मस्थानं तथापि विधोः कलां
कलयति निजे मौलौ देवः स्वयं हि महेश्वरः ॥ २२ ॥

इतः परन्तु —

अवश्यं कन्यानां भवति परकीयत्वमिति वः
सहिष्ये विश्लेषं कथमपि भृशं दुःसहमपि ।
इदं तु प्रीत्यै मे भवति भवतीनां न तु मिथो
वियोगः प्रादुष्यात् परगृहगतानामपि यतः ॥ २३ ॥

सीता — (सास्रम्) (क) ताद, एत्तिअं कालं तुह अंकपल्लंकसुहसाइणीओ भविअ[1] अह्मे तुह्मोहि विरहिआ कहं खणं पि जीवामो ?

जनकः — पुत्रि देवयजनसम्भवे ! अलं परिदेवितेन ।

धात्रीन्द्रः श्वशुरः स वो दशरथः श्वश्रूश्च कल्याणिनी
कौसल्या सरसोपलालनकलाकौशल्यकल्यात्मिका ।
कैकेयी च हितोपलम्भनलसन्मित्रा सुमित्रा च ते
ह्यस्मान् विस्मरयन्ति वः सुचरितैर्मध्यामयोध्यां गताः ॥ २४ ॥

माण्डवी — (ख) ताद ! के णाम अह्मे विसरअन्ति तुह्माणं अजिह्माइं विह्मअणिज्जाइं बह्मसंकरसंगघणुहसदमहप्पमुहेहिं वि संभावणिज्जाइं सअलअण-

---

(क) तात, एतावन्तं कालं तवाङ्कपर्यङ्कसुखशायिन्यो भूत्वा वयं युष्माभिर्विरहिताः कथं क्षणमपि जीवामः ?

(ख) तात, के नामास्मान् विस्मरयन्ति युष्माकमजिह्मानि विस्मयनीयानि ब्रह्मशङ्करशार्ङ्गधन्वशतमखप्रमुखैरपि सम्भावनीयानि सकलजनहृदयसंजननपरमौषधानि स्वभाव-

---

1. 'विमिअ' ख.

हिअअसंवणणपरमोसहाइ सहावमहुराइ महागुणसव्वस्साइ ?

जनकः — (सस्मितम्) वत्से, स्वजनपरित्यागं भर्तृभवननिवासं च स्त्रीणां नैसर्गिकत्वान्नातिदुष्करमिव पश्यामि ।

तथाहि —

स्वस्त्रीचन्द्रसुहृद्विद्रुमलतादन्तीन्द्रधन्वन्तरि-
प्रायानात्मसहोदरान् स्वपितरं सिन्धुश्च सम्मुञ्चती ।
श्वेतद्वीपगतं विमुक्तजनतावासं गुणैरुज्झितं
विष्णोर्मन्दिरमिन्दिरा भगवती संप्राप्य संप्रीयते ॥ २५ ॥

मञ्जरिका — (क) सहीओ सच्चमिदं महाराओ भणदि । जम्मट्ठाणादो णिक्कमिअ अण्णट्ठाणे वड्ढणं कण्णआअणाणं वीहित्थम्बाणं च भूइट्ठो धम्मो ।

जनकः — (ऊर्मिलां प्रति)

यजनावनेः समुदिताश्च जानकीं
निजतातसोदरसुताश्च माण्डवीम् ।
जननीमिव त्वमवलोकयोर्मिले!
श्रुतकीर्तिमप्यनिशमात्मजामिव ॥ २६ ॥

ऊर्मिला — (ख) ताद ! को एत्थ संदेहो ।

---

मधुराणि महागुणसर्वस्वानि !

(क) सख्यः, सत्यमिदं महाराजो भणति । जन्मस्थानान्निष्क्रम्यान्यस्थाने वर्धनं कन्यकाजनानां व्रीहिस्तम्बानाञ्च भूयिष्ठो धर्मः ।

(ख) कोऽत्र सन्देहः ।

मञ्जूषिका — (क) सुदकित्तिं पि किं पि सिक्खेदु महाराओ ।

जनकः — (सस्मितं श्रुतकीर्तिं प्रति)

मातृरिव त्वमपि[1] मानय माण्डवीश्च
सीताश्च शीतवचनोर्मिभिरूर्मिलाश्च ।
तिस्रोऽप्यमूः पुनरमूढधियोऽनघे त्वां
पुत्रीमिव प्रणयपेशलमीक्षितारः ॥ २६ ॥

श्रुतकीर्तिः — (ख) जं तादो आणवेदि ।

(प्रविश्य)

शतानन्दः — सर्वेऽपि यथापूर्वमुपविशन्तु[2] (इत्युपविश्य) अयि वत्सा राजदारिकाः, वयञ्च किञ्चिदाचक्ष्महे —

यश्चक्षुर्जगतां निमेषकलितप्रत्यूहशून्यं शिवं
यस्तत्त्वं परमस्तसंगममलं निष्कारणं निष्क्रियम् ।
राजर्षिर्निगमान्तशास्त्रविषये यस्य प्रशिष्यो ह्ययम्[3]
दिष्ट्या तस्य निरस्ततो भगवतो जाताः स्थ यूयं स्नुषाः ॥ २७ ॥

---

(क) श्रुतकीर्तिमपि किमपि शिक्षयतु महाराजः ।

(ख) यत् तात आज्ञापयति ।

---

१. 'त्वमवलोक्य माण्ड' घ.

२. 'पुरस्ताप' ग.

३. 'ह्यभौ' क.

तदिदमुपदिश्यते —

श्वश्रूः शुश्रूषणेन श्वशुरमपि तथा लालनैर्बालिवर्गं
भृत्यान् भृत्यर्पणेन स्मितशुचिरचनग्रन्थिभिर्बन्धुलोकम् ।
यातॄरन्योन्यमैत्र्या समधिकसमुपच्छन्दनाभिर्ननान्दॄ-
राराध्यन्त्यो यथार्हं भवत पतिगृहे पूजिता राजिताश्च ॥ २८ ॥

मञ्जरिका — (क) मञ्जूसिए, अह्मेहिं सिक्खिदव्वं सव्वं पि उपज्झाएण एव्व सिक्खिदम् ।

जनकः — (सीतां प्रति) वत्से, उचितमिदमुपदिशति भगवानुपाध्यायः ।

किञ्च—

भर्ता कामं भवतु भवने वा वने वावनेर्वा
प्रायेणास्तु क्वचन विषयः सम्पदामापदां वा ।
स्वच्छन्दो वा भवतु परतन्त्रोऽथवा सर्वथापि-
च्छायेवैनं प्रतिलगति या केवलं सैव साध्वी ॥ २९ ॥

सीता — (स्वगतम्) (ख) अवि णाम अहं अय्यउत्तेण अविरहिदा भविस्सम् ।

(प्रविश्य)

काञ्चुकीयः — जयतु महाराजः । अपि सुखमुपाध्यायपादानाम् ?

---

(क) मञ्जूषिके, आवाभ्यां शिक्षितव्यं सर्वमप्युपाध्यायेनैव शिक्षितम् ।

(ख) अपि नामाहमार्यपुत्रेणाविरहिता भविष्यामि ।

शतानन्दः — भद्र मन्दारक, अपि तथा तदभ्युपगतं महाराजदशरथेन?

काञ्चुकीयः — अथ किम्?

जनकः — भगवन्, किन्नाम?

शतानन्दः — (कर्णे) एवमिव ।

जनकः — (सहर्षमात्मगतम्) साधु, कुमार कुशध्वज, साधु ।

यासौ कोमलमेदिनी कुमुदिनीवेन्दोश्चिरं कांक्षति
प्रव्यक्तोज्ज्वलनव्ययौवनकलापूर्णस्य यस्योदयम् ।
रामं सापि हि सन्ध्ययेव सुतरामारक्तया सीतया
सम्प्रत्येव वृतं प्रपद्य लभतामस्याः सपत्नीपदम् ॥ ३० ॥

(प्रकाशम्) भगवन्नुपाध्याय, सम्प्रति जामदग्न्यविजयमंगलानुमिलितपुलहपुलस्त्यागस्त्यवसिष्ठवाल्मीकिवामदेवकाश्यपजाबालि[1]प्रमुखमुनिवृन्दारकवृन्दसुमहितायां सभायां वत्सरामभद्रस्य यौवराज्याभिषेकमहोत्सवो भवत्प्रोत्साहितेन कुमारकुशध्वजेन प्रारब्ध इत्यति हि नाम प्रमोदामहे ।

मञ्जरिका — (सीतामालिङ्ग्य) (क) हला जाणइ, दिट्ठिआ वड्ढसि । जं दिण्णमत्ता एव्व तुमं चक्कवट्टिघरिणीपअं आरोविआसि बन्धुजणेहि ।

(नैपथ्ये)

---

(क) हला जानकि, दिष्ट्या वर्धसे, यद् दत्तमात्रैव त्वं चक्रवर्तिगृहिणीपदमारोपितासि बन्धुजनैः ।

---

1 'जाम्बालि' रा. ग. क.

भो भोः पौरजानपदाः, महाराजदशरथसीरध्वजानुमोदितः कुमारकुशध्वजो वः समाज्ञापयति । यदुत—

धूपैरापाद्यधर्म्ये[1] श्रियमुपरिगृहारोहिभिर्माहिपाक्षैः
　शुभ्रैरभ्रैरदभ्रैरिव शरदि विधत्ताम्बरैरम्बरान्तम् ।
अर्णांसि स्वर्णकुम्भैरुपनयत जवादर्णवानाञ्चतुर्णां
　निर्णीतोऽस्माच्चतुर्थेऽहनि भुवनहितो रामभद्राभिषेकः ॥ ३१ ॥

जनकः — (सस्मितम्) अहो कुमारस्योचिते वस्तुनि सुमहानभिनिवेशः । तद्वयमपि महोत्सवमिमं सम्भावयामः । (उत्थाय)

अस्मिन्ननीक्षणमभिजातभुजापदान-
　क्रीडाभृशोदितयशो[2]भरराम[भद्रे] ।
विन्यस्य भारमवनेरवने प्रवीणे
　विश्रान्तिमान् भवतु पङ्क्तिरथो नरेन्द्रः ॥ ३२ ॥

(इति निष्क्रान्ताः सर्वे ।)

॥ इति तृतीयोऽङ्कः ॥

---

१. 'ह' ब.
२. 'भचन्द्र' घ.

## ॥ अथ चतुर्थोऽङ्कः ॥

(ततः प्रविशति मायावसुः

मायावसुः — (समन्तादवलोक्य)

जृम्भारम्भिकुसुम्भकेसरसखैः साकूतकोकाङ्गना-
दृष्टैः कैश्चन रोचिषां परिकरैः प्राची यदाचीयते ।
यच्चात्मद्युतिभङ्गभीरव इव म्लायन्ति तारागणा-
स्तन्मन्ये तरसा भविष्यति रविः पूर्वाद्रिचूडामणिः ॥ १ ॥

तत्कथमिदानीमपि विदेहमन्दिराद् न प्रतिनिवर्तते तत्र भवत्याः शूर्पणखायाः प्रियसखी स्वयमयोमुखी नाम ।

(ततः प्रविशत्ययोमुखी ।)

अयोमुखी — (क) अहं दाव भट्टिदारिआए सुप्पणहाए णिओएण रामलक्खणगुणगणप्पच्चक्खीकरणकारणं[1] मिहिलाणअरीं पट्ठंती पिट्ठदो आअच्छिअ माआवसुणापि जं समादिट्ठं तं पि समवहारिअ तं णअरीं पविसन्ती तेहिं दुवेहिं जहादिट्ठं तहाणुट्ठिअ तदो पडिणिवुत्तह्मि । (परिक्रम्यावलोक्य च) अए ! एस माआवसू इदो एव्व आअच्छदि । (उपसृत्य) जेदु अय्यो ।

मायावसुः — (सहर्षम् )कथमागतासि अयोमुखि, अपि सिद्धं तत् कार्यम्?

---

(क) अहं तावद् भर्तृदारिकायाः शूर्पणखाया नियोगेन रामलक्ष्मणगुणगणप्रत्यक्षीकरणकारणं मिथिलानगरीं प्रतिष्ठमाना पृष्ठत आगत्य मायावसुनापि यत् समादिष्टं तदपि समवधार्य ता नगरीं प्रविशन्ती ताभ्यां द्वाभ्यां यथादिष्ट तथानुष्ठाय ततः प्रतिनिवृत्तास्मि । अये ! एष मायावसुरित एवागच्छति । जयत्वार्यः ।

---

1. 'कारणं' ग. 'करणं' घ. ङ.

अयोमुखी — (क) अय्य, को एत्थ सन्देहो। अयोमुही कुदो विमुही होइ।

मायासुः — (सस्मितम्) तत् कथय यथावृत्तम्। —

अयोमुखी — (ख) सुणादु अय्यो। अहं खु भट्टिदारिआए[1] सुप्पणहाए अय्यस्स अ कज्जं एकीकदुअ साहेउं पवुत्ता मिहिलाणअरीं पविसिअ मन्थराए वेसं ओलंबंती रामस्स रज्जाहिसेअमहूसवं सम्भावेउं पवट्टमाणाए भरहजणणीए केअईए[2] पादेसु पडन्ती सोअं विणा[3] वि सोअवाहप्पवाहं उक्किरन्ती रोदिउं पवुत्तह्मि।

मायासुः — साधुतरोऽयं कपटनाटिकानान्दीप्रस्तावः। ततस्ततः?

अयोमुखी — (ग) तदो अब्भन्तरपरिचारिआवलोअणजणिअसंमदसंमुहीणाए ताए सअं च्चिअ करजुअले गह्णिअ उट्ठाविआ अस्सुकालणं च पुच्छिआ अहं एवं वत्तुं पवुत्तह्मि।

मायासुः — किमिति?

---

(क) आर्य, कोऽत्र सन्देहः। अयोमुखी कुतो विमुखी भवति।

(ख) शृणोत्वार्यः। अहं खलु भर्तृदारिकायाः शूर्पणखाया आर्यस्य च कार्यमेकीकृत्य साधयितुं प्रवृत्ता मिथिलानगरीं प्रविश्य मन्थराया वेषमवलम्ब्य रामस्य राज्याभिषेकमहोत्सवं सम्भावयितुं प्रवर्तमानाया भरतजनन्याः कैकेय्याः पादयोः पतन्ती शोकं विनापि शोकबाष्पप्रवाहमुत्किरन्ती रोदितुं प्रवृत्तास्मि।

(ग) ततोऽभ्यन्तरपरिचारिकावलोकनजनितसम्मदसम्मुखीनया तया स्वयमेव करयुगले गृहीत्वोत्थापिता अश्रुकारणं च पृष्टा अहमेवं वक्तुं प्रवृत्तास्मि।

---

१. इदस्त भट्टि° ग.
२. 'आदए' ग.
३. 'णा माअ' ग.

अयोमुखी — (संस्कृतमाश्रित्य)

मुग्धे दुग्धमिति भ्रमेण गरलं पातुं प्रवृत्तासि किं
रामो यद्यभिषेचितः स भरतो राज्यादपि भ्रंशितः ।
सौभाग्यं तव कोसलेन्द्रदुहितुर्दास्यास्तु हास्यास्पदं
राज्ञस्त्वं खलु भोगिनी तदपि हा जातासि किं निर्विषा ॥ २ ॥

मायावसुः[1] — (विहस्य) भद्रे, मर्मस्वेवायं प्रहारः । ततस्ततः ?

अयोमुखी — (क) एव्वं बहुप्पआरं णिब्भच्छिआ संजणिअकोवकंपिअकुअकुम्भा जंभारिसहअत्तणो भत्तारं हक्कारिऊण पुव्वप्पडिस्सुदं किल वरजुअलं पत्थिदवदी पत्थिवकुडुम्बिणी केकेई ।

मायावसुः — तद्वरयुगलं किन्नाम ?

अयोमुखी — (ख)

चोद्दहवरिसाइं वणे वसउ ससीओ सलक्खणो रामो ।
भरउ तुह रज्जभारं जुवराओ वच्छभरहो त्ति ॥ ३ ॥

मायावसुः — उभयमप्यतिदुष्करं भविष्यति[2] दशरथस्य ।

---

(क) एवं बहुप्रकारं निर्भर्त्सिता सञ्जातकोपकम्पितकुचकुम्भा जम्भारिसखमात्मनो भर्तारमाहूय पूर्वप्रतिश्रुतं किल वरयुगलं प्रार्थितवती पार्थिवकुटुम्बिनी कैकेयी ।

(ख) चतुर्दश वर्षाणि वने वसतु ससीतः सलक्ष्मणो रामः ।
विभर्तु तव राज्यभारं युवराजो वत्सभरत इति ॥

---

१ 'मु – भद्र' ग
२ 'भवति' ग

अयोमुखी — (क) एव्वं एदं । तहवि विविहं पलविअ सच्चसंधदाए कहं वि तह[1] त्ति पडिवण्ण दसरहेण ।

मायावसुः — (सप्रमोदम्) भद्रे, फलितमिदानीं महाराजरावणस्याभिलाषेण भवत्याः प्रयत्नेन च । कुतः—

विराधखरदूषणत्रिशिरसां विहारास्पदं
विशन् दशरथात्मजो महदिदं वनं दण्डकाम्[2] ।
असौ सुलभनिग्रहः सुखपरिग्रहा जानकी-
त्युभावपि मनोरथौ दशमुखस्य सिद्धाविव ॥ ४ ॥

ततस्ततः ?

अयोमुखी — (ख) तदो गोदमगोरव्वअंकुसद्धयकोसिअप्पमुहेहिं[3] पडिसिद्धो वि रामो पिदुणो सच्चप्पडिण्णत्तणं ण परिच्चाइस्सं ति भणिअ सोमित्तिसीआमत्तपरिवारो जडावक्कलमत्तमंडणो चावतूणबाणासणकवअहरो तदो विदेहणअराओ पोरअणणअणजलदुद्दिणकद्दमिएण राअमग्गेण णिग्गओत्ति एत्तिअं

(क) एवमेतत् । तथापि विविधं प्रलप्य सत्यसन्धतया कथमपि तथेति प्रतिपन्नं दशरथेन ।

(ख) ततो गौतमगौरव्यकुशध्वजकौशिकप्रमुखैः प्रतिषिद्धोऽपि रामः पितुः सत्यप्रतिज्ञत्वं न परित्यक्ष्यामीति भणित्वा सौमित्रिसीतामात्रपरिवारो जटावल्कलमात्रमण्डनो चापतूणबाणासनकवचधरस्ततो विदेहनगरात् पौरजननयनजलदुर्दिनकर्दमितेन

१. तहेत्ति प.
२. 'कम्' ग. ग प. ब.
३. 'स धोसअ' म.

जाणामि । अहं च तक्खणं चिअ केण वि केदवोवण्णासेण केअईघरादो णिहुअं णिक्कमिअ पलाअंती एत्थ आअदम्हि ।

मायावसुः — भद्रे, महत् प्रयोजनमनुष्ठितं भवत्या ।

सफलपरिणामोऽसौ यत्नस्तवेति निवेदिते
त्वयि तु भविता प्रीतिस्निग्धो भृशं दशकन्धरः ।

(विहस्य)

वलयवहने पाणी कर्णौ च कुण्डलधारणे
तव कुचभरौ हारोद्धारे कथं प्रभविष्यतः ॥ ५ ॥

अयोमुखी — (क) अज्ज, अलं परिहासेण ।

विज्जुज्जीहविणासदूमिअमणा विज्जाहरे किण्णरे
गन्धव्वे सुरजक्खरक्खसभडे णिंदेइ मंदेअरम् ।
जा सा सुप्पणहा महागुणणिहिं सोऊण सीआवइं
कामुम्माअमहंबुहिम्मि गहिरे मज्जेइ लज्जं विणा ॥ ६ ॥

---

राजमार्गेण निर्गत इत्येतावद् जानामि । अहञ्च तत्क्षणमेव केनापि कैतवोपन्यासेन कैकेयीगृहान्निभृतं निष्क्रम्य पलायमानात्रागतास्मि ।

(क) आर्य, अलं परिहासेन ।

विद्युज्जिह्वविनाशदूनमना विद्याधरान् किन्नरान्
गन्धर्वान् सुरयक्षराक्षसभटान् निन्दति मन्देतरम् ।
या सा शूर्पणखा महागुणनिधिं श्रुत्वा सीतापतिं
कामोन्मादमहाम्बुधौ गभीरे मज्जति लज्जां विना ॥

---

१ 'सवरे' क.

ता तारिसाहिणिवेसवीहलाए तिस्से मणोरहो कहं साहिज्जउ ?

मायावसुः — भद्रे, किमन्यत् ।

नागसहस्रप्राणा रौत्र समासाद्य हरतु दाशरथिम् ।
सीतां च पूर्वजाय प्रणिदत्तां प्राभृतीकृत्य ॥ ७ ॥

अयोमुखी — (क) ता अहं एव्वं से णिवेदेमि ।

मायावसुः — एवमस्तु ।

(अयोमुखी निष्क्रान्ता ।)

(प्रविश्य चित्रपटहस्तः)

करम्बकः — (ख) जेदु अज्जो ।

मायावसुः — भद्र[1], कुत आगच्छसि किं वा चेदम् ?

करम्बकः — (ग) महाराअलंकेसरस्स जाणईगआणुराअजणिअरणरणिआविणोअणत्थं[2] अमच्चपहत्थस्स सासणेण मये एदस्सि चित्तपडे कुदो वि किं वि

---

तत्तादृशाभिनिवेशविह्वलायास्तस्या मनोरथः कथं साध्यताम् ?

(क) तदहमेवमस्यै निवेदयामि ।

(ख) जयत्वार्यः ।

(ग) महाराजलङ्केश्वरस्य जानकीगतानुरागजनितरणरणिकाविनोदनार्थममात्यप्रहस्तस्य

---

१. 'द करम्बक' । कुत. रा. ग. घ. च.

२. 'द' क.

वत्थुअं केण वि सिप्पिणा लिहिअं। एदं च अमच्चपहत्थस्स हत्थे दाउं तुरिअं गच्छामि।

मायावसुः — कथमेनमतिभूम्निगतोत्कण्ठो वर्तते महाराजदशकण्ठः?

करम्भकः — (क) अह इम्।

चन्दं णिन्दइ चन्दणाअलमरुप्फंदे वि खिदेइ सो
मन्दारद्दुमवुंदसंदसिसिरट्ठाणे वि णो णंदइ।
कन्दप्पज्जरडज्झमाणहिअओ गच्छेइ मुच्छं मुहू
मिच्छा जप्पइ जंपि किंपि विरहाअंकेसु लंकेसरो ॥ ८ ॥

(निष्क्रान्तः।)

मायावसुः — तद्यावदहमप्याचार्यमारीचस्याश्रमे कञ्चित्कालं प्रतिपालयिष्यामि तयोर्मानुषडिम्भयोः सीतायाश्च दण्डकारण्यप्रवेशम्।

ततश्च—

---

शासनेन मयैतस्मिन् चित्रपटे कुतोऽपि किमपि वस्तु केनापि शिल्पिना लेखितम्। एतच्चामात्यप्रहस्तस्य हस्ते दातुं त्वरितं गच्छामि।

(क) अथ किम्।

चन्द्रं निन्दति चन्दनाचलमरुत्स्पन्देऽपि खिद्यते सः
मन्दारद्रुमवृन्दसान्द्रशिशिरस्थानेऽपि न नन्दति।
कन्दर्पज्वरदह्यमानहृदयो गच्छति मूर्च्छां मुहु-
र्मिथ्या जल्पति यदपि किमपि विरहातङ्केषु लङ्केश्वरः ॥

वीर्योत्सेकप्रौढिमाजा विराधे-
नास्मद्वंशद्रोहिणौ मानुषौ तौ ।
जीवग्राहं ग्राहयिष्यामि पश्चात्
तन्व्या सार्धं प्रापयिष्यामि लङ्काम् ॥ ९ ॥

(इति निष्क्रान्तः ।)

॥ विष्कम्भः ॥

(ततः प्रविशति कामयमानावस्थो रावणः प्रतीहारी च ।)

रावणः — (साशंसम्)

यस्य श्राम्यमनास्तुलामिव कलाविश्लेषसंश्लेषण-
क्लेशानार्जति मासि मासि मसृणस्तन्द्रां विना चन्द्रमाः ।
अम्भोजानि च संकुचन्ति विकसन्त्यद्यापि रात्रिन्दिवं
जानक्या वदनं कदा नु तदहं पश्यामि दृश्यं परम् ॥ १० ॥

(समन्तादवलोक्य)

अये[१] ! कथमृतवः षडपि मामुपसेवन्ते । भवतु ।

प्राप्तोल्लासैः पलाशैः स्मरयति सुदृशो दन्तवासो वसन्तो
ग्रीष्मः सोष्मापि तस्याः स्मितमनुहरते काशपुष्पप्रकाशैः ।
रम्यं धम्मिल्लभारं पिशुनयति घनैः प्रावृडब्जैः शरच्च
व्याकोचैर्वक्त्रलक्ष्मीमिति चतुर ऋतूनाद्रिये नाद्रियेऽन्यौ ॥ ११ ॥

---

१. च. पाठे 'अये' इति नास्ति ।

प्रतीहारी — (क) महाराअ, केवलं दुवेणं हेमन्तसिसिराणं उदूणं[1] किं अणाअरणे कारणम् ?

रावणः — हेमवति, केवलं निष्प्रयोजनानपि प्रभवो नाद्रियन्ते किमुत सापराधान् । पश्य,

जडप्रकृतिकाविमौ जनकजन्मनः स्मारकं
न वस्तु विभृतः किमप्यथ तथास्तु का वा क्षतिः ।
इदन्तु न सहामहे विरहखेददीर्घा अपि
प्रकाममतिदीर्घतां गमयतो यदेतौ निशाः ॥ १२ ॥

प्रतीहारी — (स्वगतम् ।) (ख) अहो अदिगम्भीरसहावो वि कुम्भअण्णग्गओ वम्महेण एरिसीं असरिसविसआवडणदुत्थं अवत्थं पाविओ, जं माणुसीगएण[2] अणुराअपिसाएण हिअअं आविसिअ जं पि किं पि असंबंधं पलावीअदि एसो । (प्रकाशम्) महाराअ, गआणुगइओ खु लोओ । अदो दिग्घिददिग्घीकरणेण एदाणं उदूणं अवराहो णत्थि त्ति मे पडिभादि । पढमं चिअ जो दिग्घीकरेइ रअणिं तहिं एव्व कोवो कादव्वो ।

---

(क) महाराज, केवलं द्वयोर्हेमन्तशिशिरयोः ऋत्वोः किमनादरणे कारणम् ?

(ख) अहो अतिगम्भीरस्वभावोऽपि कुम्भकर्णाग्रजो मन्मथेनेदृशीमसदृशविषयापतन-दुःस्थामवस्थां प्रापितः, यद् मानुषीगतेनानुरागपिशाचेन हृदयमाविश्य यदपि किमपि असंबन्धं प्रलाप्यते एषः । महाराज, गतानुगतिकः खलु लोकः । अतो दीर्घितदीर्घीकरणेन एतयोः ऋत्वोरपराधो नास्तीति मे प्रतिभाति । प्रथममेव यो दीर्घीकरोति रजनीं तस्मिन्नेव कोपः कार्यः ।

---

1. 'णं को अवराहो ?' ख. ग. घ. ङ.
2. 'विअ'. घ.

रावणः — (विहस्य) मुग्धे, स्मरज्वरं प्रति कोपेन किं स्यात्। तस्य प्रशमने संयोगादृते नान्यः कश्चिदुपायः।

प्रतीहारी — (क) जइ एव्वं ता किण्णिमित्तं वलामोडिसमाहरिअसुरासुरमणुअभुअंगमंगणा वि तुह्माणं भुअदंडा एत्थ विसए ण पअट्टन्ति ?

रावणः — हेमवति,

नलकूबरशापयन्त्रिता बलवन्तोऽपि हि मे भुजा इमे।
न खलु प्रभवन्ति योषितामनुवादेन विना हठग्रहे ॥ १३ ॥

प्रतीहारी — (ख) अणणुऊलासु होदु एव्वम्। जाणई उण ण तह त्ति जाणीअदु, जदो माआवसुणा महाराए साणुराआ जाणइ त्ति णिवेदिदपुरुवं एव्व।[1]

रावणः — (सनिश्वासम्) आ! स्मरामि।

प्रतीहारी — (ग) अदो तिस्से हठग्गहो वि ण दोसस्स भविस्सिदि त्ति तक्केमि।

---

(क) यद्येवं तत् किन्निमित्तं बलात्समाहृतसुरासुरमनुजभुजगमाङ्गना अपि युष्माकं भुजदण्डा अत्र विषये न प्रवर्तन्ते ?

(ख) अननुकूलासु भवत्वेवम्। जानकी पुनर्न तथेति ज्ञायताम्, यतो मायावसुना महाराजे सानुरागा जानकीति निवेदितपूर्वमेव।

(ग) अतस्तस्या हठग्रहोऽपि न दोषाय भविष्यतीति तर्कयामि।

---

१ एव्व। अदो तिस्से हठग्गहो वि ण दोसस्स भविस्सिदि त्ति तक्केमि। रावण — (सनिश्वास) भद्रे, क.

रावणः — भद्रे, साधु प्रतिबोधितम् ।

धीरोदात्तप्रकृतिसुभगप्रौढवीर्य[1]प्रकृष्टे
धन्ये यूनि प्रणयसरसा हन्त वासुन्धरेयी ।
इत्थं तेन प्रकथितमभूत् किन्तु न श्रद्दधाति
श्रेयोराशेरसुलभतया तादृशो मानसं नः ॥ १४ ॥

(सन्तापमभिनीय आकाशे लक्षं[2] बद्ध्वा) हंहो कुसुमायुध[3] !

दग्धं येन पुरा वपुस्तव पुरां जेत्रा स्वनेत्रानले
तस्याप्यासमहाचलोऽपि हि मया दोर्भिः समुन्मूलितः ।
इत्युच्चैरुपकारि मित्रमपि मामस्त्रानले निस्त्रपो
निर्दहन्निव लक्ष्यसे कथमहो भिन्नक्रमो विक्रमः ॥ १५ ॥

प्रतीहारी — (क) महाराअ, णिज्जिअवज्जपाणिणो वि महाराअस्स कुसुमसिलीमुहादो पराभवो त्ति अहो अच्छेरम् ।

रावणः — सरले, त्वमनभिज्ञासि वरतनुविलोपाणाम् । अयं हि—

संरम्भेऽपि न कम्पते न च वचस्सन्तर्जने लज्जते
नाप्यरिशूत्रचक्रकवलनकार्येऽप्यपक्रामति ।

---

(क) महाराज, निर्जितवज्रपाणेरपि महाराजस्य कुसुमशिलीमुखात् पराभव इत्यहो आश्चर्यम् ।

---

१. 'प्रौढिवीर्य' ख. घ.
२. 'लक्ष्य' ग. ङ.
३. 'सुमधन्वन्' ख. ङ.

कस्मादस्य समस्तिनास्तिवपुषो भीतिः किमेतावता
मन्ये निन्दति चन्द्रहासमपि नश्चित्तेन चित्तेशयः ॥ १६ ॥

प्रतीहारी — (क) ता इदो एदु महाराओ ।

सव्वो वि तुह सन्दावो तदा सन्ति गमिस्सिदि ।
सव्वआलमणोजस्स जदारामस्स सेवणम् ॥ १७ ॥

रावणः — (सक्रोधम्) आः पापे, किं किं रामस्य सेवनमिति । येन हि—

शक्रो निर्कोशितोऽभून्मृधभुवि बहुधा मोहितो रोहिताश्वो
भूतः प्रेताधिराजो मरुदपचरितो दण्डितश्चण्डरोचिः ।
पाशी पाशेन बद्धो मुहुरुरगभितः खिन्नता किन्नरेशः
सोऽयं मर्त्येनुना त कथमिव जुषतां हन्त भोः पङ्क्तिकण्ठः ॥ १८ ॥

प्रतीहारी — (सभयम्) (ख) पसीददु पसीददु महाराओ । आरामस्स[1] सेवण त्ति मए कहिअ ण उण रामस्स सेवण त्ति ।

रावणः — (स्पर्शं रूपयित्वा)

---

(क) तदित एतु महाराज ।

सर्वोऽपि तव सन्तापस्तदा शान्ति गमिष्यति ।
सर्वकाल्मनोज्ञस्य यदारामस्य सेवनम् ॥

(ख) प्रसीदतु प्रसीदतु महाराज । आरामस्य सेवनमिति मया कथित न पुना रामस्य सेवनमिति ।

---

1 मसेवण ति' क

आरादारामवाटादमरतरुलताधामहेमारविन्द-
प्रश्च्योतन्मुग्धमाध्वीपरिमलभरणायासमन्दप्रचारः ।
कासारस्फारवारिप्रसृमरलहरीबिन्दुसन्दोहसान्द्रः
संसर्पन् दर्पकस्य स्वयमयमयते बन्धुतां गन्धवाहः ॥ १९ ॥

(पुनस्सन्तापनाटितकेन) हेमवति ! पश्य पश्य-

भ्रमद्भ्रमरगुञ्जितप्रकृतिमञ्जुशिञ्जारवं
वितत्य सकलर्तुजप्रसवराजिरूपं धनुः ।
विकस्वरपिकस्वरस्तवसमृद्धदर्पोद्धुरः
स्मरो मम पुरोभुवि स्फुरति मारुतस्यन्दनः ॥ २० ॥

धनुस्तावत् ।

प्रतीहारी — (स्वगतम्) (क) अहो अच्चारूढो से वम्महुम्माओ केण दाव विणोअणसाहणेण[1] किंपि पसंतिं पाविज्जउ ।

(ततः प्रविशति चित्रपटहस्तः प्रहस्तः ।)

प्रहस्तः — अहो नु खल्वसमीक्ष्यकारिता तत्रभवत्याः शूर्पणखायाः । यद्विराधस्यागमनकालं प्रतिपालयितुमक्षमा स्वयमेव दण्डकारण्यमाहिण्डमाना मानुषकुमारयोरागमनप्रतीक्षा किल पर्यटति ।

---

(क) अहो अत्यारूढोऽस्य मन्मथोन्मादः केन तावद्विनोदनसाधनेन किमपि प्रशान्ति प्राप्यताम् ।

---

१. 'हसेण'. म.

दण्डकारण्यमायातौ ससीतौ रामलक्ष्मणौ ।
हत्वाहमागमिष्यामि मायया वा हठेन वा ॥ २१ ॥

इत्थं किल विराधेन प्रतिज्ञातम् । तदश्रद्दधानाशास्तस्याः प्रस्थानमिदमकल्याणं दर्क भविष्यतीति तर्कयामि ।

सुन्दस्त्रियं हतवतोऽस्य सुबाहुशत्रोः
स्त्रीपुंसभेदमपहाय रिपुं जिघांसोः ।
रामस्य सन्निधिमुपेत्य सलक्ष्मणस्य
स्थातुं धिगिच्छति किल त्रपया विना सा ॥ २२ ॥

भवतु । स्वामिनमुपसर्पामि । (उपसृत्य) जयतु महाराजः ।

रावणः — (अनाकर्णितकेन) हेमवति ! धनुस्तावद् । (इति हस्तं प्रसारयति ।

(प्रहस्तः चित्रपटं हस्ते निक्षिपति ।)

रावणः — (विलोक्य) किमिदम् ।

प्रतीहारी — (क) इदं[1] अमच्चपहत्थेण हत्थे णिक्खिविअं किंवि ।

रावणः — (पार्श्वतोऽवलोक्य) अये प्रहस्तः ।

प्रहस्तः — महाराज ! अयं चित्रपटः यत्र समर्पिता सीताप्रतिकृतिः ।

(क) इदममात्यप्रहस्तेन हस्ते निक्षिप्तं किमपि ।

१. 'एदं'. ख.

रावणः — (सहर्षम्) तदिदमुद्वेष्ट्याग्रतः प्रसारय ।

(प्रहस्तः आदाय तथा करोति ।)

रावणः — (निर्वर्ण्य सविस्मयानुरागम्) अये ! इयं सा जानकी ।

एषा खलु—

लावण्यामृतसारणीसरणिभिर्लालित्यनित्यास्पदै-
रङ्गैरङ्गजकेलिरङ्गतलिमैः शृङ्गारशृङ्गाटकैः ।
अध्यक्षीकृतसर्व[1]यौवतवपुःश्रीणां मदक्ष्णामपि
प्रीतिं कामपि कामनीयकमयी पुष्णाति तृष्णावताम् ॥ २३ ॥

किञ्च—

चित्रं चित्रार्पितापि स्मितमधुरसुधादिग्धमुग्धाननेन्दुः
सुभ्रूस्सभ्रूविलासे किमपि मयि दृशोश्चले मुञ्चतीव ।
किञ्चोदञ्चत्कपोलस्तनतटपुलकस्वेदसम्भेदगम्यं
रम्यं रागानुबन्धं मयि पिशुनयतीवेयमब्जायताक्षी ॥ २४ ॥

(साभ्यर्थनम्) अयि प्रिये जानकि !

द्वन्द्वं सुन्दरि ! पुण्डरीकमुकुलस्पर्धालु वक्षोजयो-
र्गाढं[2] वक्षसि निक्षिप स्मरकृतातङ्कस्य लङ्कापतेः ।
किञ्चोदञ्चय चञ्चलाक्षि ! वदनं चुम्बामि बिम्बाधरं
किं वा नाभिदधामि कामित[3]मितो यद्देवि ! दासोऽस्मि ते ॥ २५ ॥

---

१. 'तदिव्ययौ' क.
२. 'ढं निक्षिप वक्षसि'. ख.
३. 'तमदं यद्देवि'. क.

प्रहस्तः — (स्वगतम्) अहो प्रतिकृतावप्यस्यां सत्यजानकीबुद्ध्यैव[1] प्रलपति देवः।

रावणः — हे भगवति! कुतः कारणादियं प्रतिवचनेनापि न सम्भावयति माम्।

प्रतीहारी — (स्वगतम्) (क) होदु। उम्मत्तीभूदेण णेण किंपि कीलावइस्सं (प्रकाशम्) महाराअ! पणअकुविदाए[2] इमाए होदव्वम्।

रावणः—

> रात्रौ गोत्रस्खलितमथवा[3] वैमुखी कामिताना-
> मन्यस्त्रैणप्रणयगणनप्रापितो वापराधः।
> इत्येतानि प्रणयकलहं प्रायशः प्रेयसीना-
> मातन्वन्ति प्रियसखि! कुतस्तानि लङ्केश्वरस्य[4] ॥ २६ ॥

प्रतीहारी — (ख) मन्दोअरीवल्लहो बलामोडिगहिअदणुअमणुअसुरपुरन्धी-सम्भोअसाहसिअस्स महाराअस्स कहं ण होइ कआवराहत्तणं।

---

(क) भवतु। उन्मत्तीभूतेनानेन किमपि क्रीडयिष्ये। महाराज! प्रणयकुपितयानया भवितव्यम्।

(ख) मन्दोदरीवल्लभो बलाद्गृहीतदनुजमनुजसुरपुरन्ध्रीसम्भोगसाहसिकस्य महाराजस्य कथं न भवति कृतापराधत्वम्।

---

१. 'बुद्धचैव'. क. ग.
२. 'ए एदए हो'. ख. ग. घ. ङ.
३. 'स्खलनमथवा'. क. ख.
४. 'लान्दहो रावनस्य'. ख. ग. घ.

रावणः — उपपन्नमिदम् । तदनुनयामि कृताञ्जलिः । देवि वैदेहि !

एकं चक्रमुभौ भुजौ च विजहाम्यन्तःपुराणां कृते
संधादेकमुपेक्ष्य शुद्ध्यति शुभे ! शिष्टो हि दुष्टोऽपि सन् ।
अन्येऽष्टादशबाहवो नव मुखान्यर्हन्ति गर्हां विना
वक्षोजावुपगूहितुं तत्र तथा बिम्बाधरं चुम्बितुम् ॥ २७ ॥

(इति पादयोः पतितुमिच्छति । )

प्रतीहारी — (ससम्भ्रमं पादयोर्निपत्य) (क) महाराअ ! विरम विरम । चित्तजाणई खु एसा, ण उण सच्चजाणई ।

रावणः— (सलज्जम्) अये ! चित्रमिदम् । (पुनर्विभाव्य प्रहस्तं प्रति) किंनामधेयोऽयं गिरिः यत्र तावदियमालिखिता वैदेही ।

प्रहस्तः — अयं हि –

तुङ्गैः शृङ्गैस्तुहिनधवलान् निर्झरानुद्वमद्भि-
द्[1]ूराल्लक्ष्यः सितपटदृढावद्धकेतुप्रकाशैः ।
मन्दाकिन्या नगरपरिखाकारयाश्लिष्टसानु-
र्नानारत्नप्रचयरुचिभिश्चित्रितश्चित्रकूटः ॥ २८ ॥

रावणः — (पुनर्विलोक्य)

अरुणवल्कजटाभरभूषणौ
कनककार्मुकबाणनिषङ्गिणौ ।

---

(क) महाराज! विरम विरम, चित्रजानकी खलु एषा, न पुनः सत्यजानकी ।

---

1. 'द.' ग.

प्रशमवीररसैकसमाश्रयौ
विलिखितौ[1] तरुणाविह काविमौ ॥ २९ ॥

प्रहस्तः — इमौ तौ रामलक्ष्मणौ ।

रावणः — (सक्रोधं खड्गमुत्कृष्य)

मर्त्यावेतावमर्त्यव्रजविजयिभुजाविक्रमस्याग्रतो मे
गर्वायेते किमेवं परिणतजरसः पाटनात्ताटकायाः ।
आसङ्गं मज्जतु द्रागधिपपुरुषयोरेनयोरद्य मद्यः
कृत्तप्रत्यर्थिकण्ठच्युतरुधिरसुरावीरपाणः कृपाणः ॥ ३० ॥

(इत्युत्तिष्ठति ।)

प्रहस्तः — महाराज! कोऽयमकाण्डे संरम्भः । चित्रमिदमिति किं विस्मृतं महाराजेन ।

रावणः — (विमृश्य) युक्तमिदम् । (उपविश्याग्रतो निर्दिशन्) कः पुनरनयोः समानरूपः कश्चिद्व्रती निवृत्त इव किञ्चिद्विप्रकृष्टो विलिखितः ।

प्रहस्तः — देव!

सुतमिमपेगजकन्नो ज्यतस्त्वं पितुरौर्ध्वदैहिकविधेरनन्तरम् ।
गुरुशासनात् प्रतिगृहीतपादुको भरतः किलैष नगरं प्रतिष्ठते ॥ ३१ ॥

रावणः — कुतस्तवायं प्रस्तावाधिगमः ।

---

१. 'तौ पुरुषावह'. ग. ग. प. क.

प्रहस्तः — अस्य चित्रपटस्योपनेतुः करम्बकस्य मुखात् सर्वमव[1]गतवानस्मि ।

रावणः — युज्यते । मायामयोः प्रणिधित्वादयोध्यावृत्तान्तवेदी स राक्षसः ।

(प्रविश्य)

दौवारिकः — जयतु महाराजः । एष[2] खलु कश्चिद्वैणिको गन्धर्वो महाराजपादानुपवीणयितुकाम इव द्वारि तिष्ठति ।

प्रहस्तः — (स्वगतम्) इदमपि विनोदनान्तरं भवतु देवस्य । (प्रकाशम्) तदेनं प्रवेशय ।

दौवारिकः — तथा । (इति निष्क्रान्तः ।)

(ततः प्रविशति गन्धर्वः ।)

गन्धर्वः —

उत्सङ्गोपनिवेशितामविरतं सम्यक् समाश्लेषणे
सान्द्रस्निग्धमृदुप्रवालवपुषा रोमाञ्चयन्तीं वपुः ।
आनन्दं मधुरस्वरप्रलपितैरातन्वतीं कर्णयो-
र्वीणामेव विभावयामि दयितामेतामलाबूस्तनीम् ॥ ३२ ॥

(विचिन्त्य) अहं तावच्चिरन्तनमहायोगिनं शरभङ्गतपोधनम् आत्मपुण्यविजितमजरामरं लोकमुपनेतुं विमानेनोपस्थितस्य भगवतः पुरन्दरस्याज्ञया दशकन्धरस्योपक्रममुपलब्धुकामः लङ्कापुरमिदमनुप्रविष्टोऽस्मि । तत् क नु खलु स मदाचार-

---

१. 'मधि' ग.
२. 'प वर्धिदे', ग. क.

प्रशमवीररसैकसमाश्रयौ
विलिखितौ[1] तरुणाविह क्वचिमौ ॥ २९ ॥

प्रहस्तः — इमौ तौ रामलक्ष्मणौ ।

रावणः — (सक्रोधं खड्गमुत्कृष्य)

मर्त्यावेतावमर्त्यव्रजविजयिभुजाविक्रमस्याग्रतो मे
गर्वायेते किमेवं परिणतजरसः पाटनात्ताटकायाः ।
आमज्जं मज्जतु द्रागधिपुरुभयोरेनयोरद्य मद्यः
कृत्तप्रत्यर्थिकण्ठच्युतरुधिरसुरावीरपाणः कृपाणः ॥ ३० ॥

(इत्युत्तिष्ठति ।)

प्रहस्तः — महाराज ! कोऽयमकाण्डे संरम्भः । चित्रमिदमिति किं विस्मृतं महाराजेन ।

रावणः — (विमृश्य) युक्तमिदम् । (उपविश्याग्रतो निर्दिशन्) कः पुनरनयोः समानरूपः कश्चिदितो निवृत्त इव किञ्चिद्विप्रकृष्टो विलिखितः ।

प्रहस्तः — देव !

सुतविप्रयोगजरुजोज्झितस्तनुं पितुरौर्ध्वदैहिकविधेरनन्तरम् ।
गुरुशासनात् प्रतिगृहीतपादुको भरतः किलैष नगरं प्रतिष्ठते ॥ ३१ ॥

रावणः — कुतस्तत्रायं प्रस्तावाधिगमः ।

---

१. 'तौ पुरुषाविह'. ग. ग. प. ७.

प्रहस्तः — ( स्वगतम् ) कष्टमहो महता विस्रम्भराशिना विक्षतेन भवितव्यम् ।

गन्धर्वः — वनं प्रविशताधुना दशरथात्मजेन क्षणात्.

प्रहस्तः — (स्वगतम्) अपगतः सन्देहः । अयि हृदय स्थिरीभव ।

गन्धर्वः — शरेण विनिपातितं मम तदाशरीरं वपुः ॥ ३४ ॥

प्रहस्तः —(जनान्तिकम् ) महाराज! महान् मनोरथतरुरामूलमुन्मूलितो दैवेन।

रावणः — (जनान्तिकम्) एवमेतत् ।

जीवग्राहं गृहीत्वा तौ मानुषौ सह सीतया ।

आनेष्यामीति येनोक्तं स एव विधिना[१] हृतः ॥ ३५ ॥

(सधैर्यावष्टम्भम् ; प्रकाशम् ) भद्र ! तिष्ठ । ततः परस्तादवगम्यत एव ।
अयं हि चिरकालप्रत्यवायस्य हेतुः ।

गन्धर्वः — एवमेतत् । किञ्च , प्रकृतिं प्राप्तस्यापि सदाऽसहजं राम-मनुगच्छतः[२] कलशजन्मनो मुनेराश्रमात् पञ्चवटीं प्रविश्य विश्राम्यतो ममान्य-प्रस्तावाक्षिप्तहृदयस्यादेतावन्तं कालम् आत्मविद्यायाः स्मरणमपि नाभूत् ।

(नेपथ्ये)

(क) हा भादर दसअंधर हा भादर कुम्भअण्ण हा भादर विहीसण हा भादु-णंदणा अक्खवकुमालमेहणाआ तुझेसु जीवंतेसु चिअ अह एरिसी दुरवत्थं मणुस्स-अंतूहिं अणुभाविदह्मि ।

( सर्वे आकर्णयन्ति )

---

(क) हा भ्रातर्दशकन्धर! हा भ्रातः कुम्भकर्ण! हा भ्रातः विभीषण! हा भ्रातृनन्दनावक्षकुमारमेघनादौ युष्मासु जीवत्स्वेवाहमीदृशीं दुरवस्थां मनुष्यजन्तुभ्यामनु-भावितास्मि ।

---

१. 'ना गतः' क.

२. 'लोऽगस्त्यमुनेराश्रमात्' ख. ग. घ.

कुण्ठो दशकण्ठः। (पुरोऽवलोक्य) अये! अयमारामोपकण्ठबाह्यालिन्दे प्रहस्तेनोपास्यमानस्तिष्ठति। यावदुपसर्पामि। (उपसृत्य) स्वस्ति समस्तलोकविजयिने महाराजदशमुखाय।

रावणः — अभिवादये। उपविशतु भवान्।

गन्धर्वः — बाढम् (उपविशति।)

रावणः[1] — महाभाग! तर्हि प्रस्तूयतामात्मनोऽधिकारः।

गन्धर्वः — गान्धर्ववेदविशेषविज्ञस्य भवतः पुरस्तात् चिरकालप्रत्यवायविस्मृतप्रायां संगीतविद्यां कथं प्रयुञ्जे इति लज्जितोऽस्मि।

प्रहस्तः — गन्धर्वपते! चिरकालप्रत्यवायस्य को[2] नाम हेतुः।

गन्धर्वः — तर्हि श्रूयताम्।

अहं हि तुम्बुरुर्नाम गन्धर्वो गर्वहेतुकात्।
अलकाधिपतेः शापादवापं यातुधानताम् ॥ ३२ ॥

प्रहस्तः — (स्वगतम्) स कतमोऽस्मासु यातुधानेषु स्यात् (प्रकाशम्) ततस्ततः।

गन्धर्वः — ततोऽहम्

विराध इति विश्रुतो विविधजन्तुहिंसापर-
श्चिराय निरवग्रहस्समचरं वने दण्डके।

---

१. प - 'तर्हि महाभाग प्र°. ख. ग.
२. 'को हेतु' ग.

प्रहस्तः — (स्वगतम्) कष्टमहो महता विस्रम्भराशिना निक्षेतेन भवितव्यम् ।

गन्धर्वः — वनं प्रविशताधुना दशरथात्मजेन क्षणात्

प्रहस्तः — (स्वगतम्) अपगतः सन्देहः । अयि हृदय स्थिरीभव ।

गन्धर्वः — शरेण विनिपातितं मम तदाशरीरं वपुः ॥ ३४ ॥

प्रहस्तः —(जनान्तिकम्) महाराज! महान् मनोरथतरुरामूलमुन्मूलितो दैवेन ।

रावणः — (जनान्तिकम्) एवमेतत् ।

जीवग्राहं गृहीत्वा तौ मानुषौ सह सीतया ।

आनेष्यामीति येनोक्तं स एव विधिना हृतः ॥ ३५ ॥

(सधैर्यविष्टम्भम्, प्रकाशम्) भद्र! तिष्ठ । ततः परस्तादवगम्यत एव ।

अयं हि चिरकालप्रत्यवायस्य हेतुः ।

गन्धर्वः — एवमेतत् । किञ्च, प्रकृतिं प्राप्तस्यापि सदारसहजं राम

मनुगच्छतः[२] कलशजन्मनो मुनेराश्रमात् पञ्चवटीं प्रविश्य विश्राम्यता ममान्य-ग्रस्तानाक्षिप्तहृदयत्वादेतावन्तं कालम् आत्मनिवासायाः स्मरणमपि नाभूत् ।

(नेपथ्ये)

(क) हा भादर दसअधर हा भादर कुम्भअण्ण हा भादर विहीसण हा भादु णदणा अक्खकुमालमेहणाआ तुह्मेसु जीवंतेसु च्चिअ अहं एरिसा दुरवत्थं मणुस्स-अत्तहिं अणुभाविदह्मि ।

( सर्वे आकर्णयन्ति )

(क) हा भ्रातर्दशकन्धर[१] हा भ्रातः कुम्भकर्ण[१] हा भ्रातः विभीषण[१] हा भ्रातृनन्दनावक्षकुमारमेघनादौ युष्मासु जीवत्स्वेवाहमीदृशी दुरवस्था मनुष्यनन्दनाभ्यामनुभाविताऽस्मि ।

१ ना गत ' क

२ ताऽगस्त्यमुनेराश्रमात् ख ग घ

प्रहस्तः — (स्वगतम्)[1] हन्त यन्मया प्रथममेवाशङ्कितं तत्तथैवापतितम् ।

रावणः — प्रहस्त ! ज्ञायतां किमेतदिति ।

प्रहस्तः — (स्वगतम्) ज्ञातमेव । (प्रकाशम्) यदाज्ञापयति महाराजः । (निष्क्रान्तः) ।

गन्धर्वः — (स्वगतम्) रामभद्रेण सौमित्रिणा वा अपकृतायाः तस्याश्च निशाचर्याः क्रन्दितेनानेन भवितव्यम् ।

(प्रविश्य)

प्रहस्तः — महाराज ! किमन्यत् ।

जयलक्ष्मलक्ष्मणकृपाणलतानिनिकृत्तघोणपुटनिष्पतितैः ।
नितरसृग्भिरभिषिक्ततनुर्भगिनी तवापतति शूर्पणखा ॥ ३६ ॥

रावणः — (सक्रोधमुत्थाय) किं किं तवापि ? ।

प्रहस्तः — श्रवसी च नासिका च त्रितयमिदं तः स्वसुर्निलूनमिति ।

(प्रविश्यापटाक्षेपणाकम्पनः)

अकम्पनः — खरदूषणत्रिशिरसां त्रितयञ्चापि रामेण ॥ ३७ ॥

गन्धर्वः — (स्वगतम्) दिष्ट्या निष्कण्टकं जनस्थानमभूत्, तदिदानीं निश्चितप्रायोऽत्र वृत्तान्तः । यावदितोऽपसरामि । (प्रकाशम्) अभूमिरस्मद्विधानां वार्ताः, तदहं गच्छामि । (निष्क्रान्तः)

रावणः — अकम्पन ! त्वया तावन्मारीचाश्रमं गत्वा तत्रभवान् मारीचो वक्तव्यः ।

अकम्पनः — महाराज ! किमिति ? ।

रावणः — (कर्णे) एवमिव ।

१ °म् ) [illegible]

अकम्पनः — यदाज्ञापयति महाराजः । (निष्क्रान्तः

रावणः — तथावदिदानीम्

चिरविरहितवृत्रवैरिनारी
घनकच[1]भारहठग्रहोत्सवानाम् ।
भवतु जनकजाकचावमर्शो
रुचिरतरोऽद्य महोत्सवो भुजानाम् ॥ ३८ ॥

(इति निष्क्रान्ताः सर्वे)

इति चतुर्थोऽङ्कः

अथ पञ्चमोऽङ्कः ।

(ततः प्रविशत्यध्वक्लान्तश्चरः)

चरः — (सशूत्कारम्)

अतिक्रान्ताः शैला न कति, कति तीर्णा न सरितो
भ्रमल्लिहव्याघ्राः कति न समतीता वनभुवः ।
समादेशो भर्तुः सनजनि सहायो न यदि नः
क्व पन्था द्राघीयान् क्व च मनुजमात्रा वयममी ॥ १ ॥

(समन्तादवलोक्य) अये कोऽयमुद्देशः । इह हि-

वृकाभिः कुक्कुरौघो विवृतमुखबिलव्यक्तरक्तार्द्रमांस-
व्यामङ्गव्याकुलाभिः प्रकृतिघृतमिथःस्पर्धितावर्धिताभिः ।
उद्गृध्यद्गृध्रतुण्डत्रुटितशवशतस्रस्त[2]मस्तिष्कपङ्क-
ग्रस्त्या सौहित्यभाजा निनिडयति स्थान् भैरवान् फेरवाणाम् ॥२॥

१. 'वृचभार'. घ.
२. 'परिस्त' ग.

(किञ्चिदुच्चैः) कोऽत्र भोः? । केऽमी संघातपरेताः शरीरिसङ्घाः ।

(आकाशे)

मिहिरान्ववायजलराशिचन्द्रमा
भरताग्रजो यदवधीन्मृधाङ्गणे ।
तदिदं चतुर्दशसहस्रसम्मितं
खरनेतृकं बलमवेहि रक्षसाम् ॥ ३ ॥

चरः — (आकर्ण्य सप्रमोदम्) दिष्ट्या चिराय गवेषितोऽद्य दर्शिष्यते स्वामी रामभद्रः । भोः क्वेदानीमात्मना तृतीयः स महात्मा ।

(आकाशे)

ताटकेयहाटकहरिणच्छद्मना सागरजमात्मानं दूरीकृत्य कपटभिक्षुवेषेण रक्षसां पत्या रावणेन वञ्चितां जानकीं गवेषयितुमितो वनाद्वनं पर्यटति पर्याकुलधृतिरात्मना द्वितीयो रामभद्र इत्येतावदवगच्छामि ।

चरः — (सशोकम्) हा कष्टमगर्भसंभवे देवि वैदेहि! कथमीदृशस्ते दैवविपाकः समुत्तः ।

यस्यास्ते जनकः स एव जनको राजर्षिराजन्मनो
विख्यातः श्वशुरश्च ते दशरथो राजा सखा वज्रिणः ।
भर्ता ते भरताग्रजो भृगुपतेर्जेता जगत्याः पति-
र्माता ते वसुधैव देवि! विपदां तस्याः कुतः सम्भवः ॥ ४ ॥

भोः अपि सत्यमिदमत्याहितं तत्रभवत्याः ।

(आकाशे)

कः संशयः । ननु तत्रभवत्याः सीतायाः जनस्थानवनवासप्रियसखी मन्दभाग्या मन्दारवती नाम वनदेवताहं ब्रवीमि । तद्गच्छ गवेषय रामलक्ष्मणावितो दक्षिणारण्येषु ॥

चरः — मन्दारवति! एवमस्तु । (परिक्रम्यावलोक्य च) अये !

अधो दण्डाकारामुपरि विततां धूमविततिं

दधानो[1] विस्तीर्णां विलसदसितच्छत्रसदृशीम् ।

स्फुलिङ्गैरालिङ्गन् गगनपथमत्यूष्मलतया

दविष्ठानप्येष[2] ग्लपयति तरून् कोऽपि दहनः ॥ ५ ॥

(पुनर्विभाव्य) धिगहं श्मशानभूमिमनुप्राप्तोऽस्मि । नूनमेष चितानलः समुद्दीप्यते ।

(नैपथ्ये)

रथपथावरणाधिगतक्रुधा दशमुखेन परिक्षतपक्षतेः ।

प्रवयसो वयसोऽस्य जटायुषो रघुसुतोपचितेव चिता ह्यसौ ॥ ६ ॥

चरः — (सखेदम्) हा कष्ट ! महाराजदशरथप्रियसुहृदोऽस्य जटायुषो विपत्तिरियं रामभद्रमतिमात्रं सन्तापयतीति तर्कयामि । केनेदं व्याहृतं स्यात् ।

(प्रविश्य दनुः)

दनुः — भद्र ! अयमहं दनुर्नाम कोऽपि गगनेचरः ।

मुनेः शापात् पापामहमधिगतो नैर्ऋतजनिं

जनद्रोही शक्रात्पुनरथ[3] शिरश्छेदमपि यः ।

कबन्धोऽहं बन्धोर्दशरथकुमारस्य कृपया

निजां मूर्तिं दिव्यां द्रुतमपमनायिष्यविकलम् ॥ ७ ॥

कुतो[4] भवान् को वा भवान् ।

---

१. 'नोऽसावुच्चैर्वि' ख. घ

२. 'प्याशु' ख. क.

३ 'रपि' क.

४. 'को भवान्' घ

चरः — (प्रणम्य) महाभाग! अयमहं नन्दिग्रामवासिनः सानुजस्य कुमारभरतस्य शासनाद् रामभद्र[1]वार्तागमार्थमागतो नन्दको नाम राजप्रणिधिः। तत् केदानीं स्वामी रामभद्रः।

दनुः — भद्र नन्दक! शृणु संक्षेपतः।

शापान्धोरुद्धरन्मामपि च शबरिकां[2] मोचयन् जन्मपाशात्
पम्पामुल्लङ्घ्य मध्येपदवि हनुमता मानितः सानुजन्मा।
कृत्वा सुग्रीवसख्यं तदनु विदलयन् पत्रिणा सप्तसालान्
हिंसित्वा वालिनञ्च प्रतिवसति गिरावृश्यमूके स रामः ॥ ८ ॥

तदित एव निवर्ततां भवान्। किञ्च दृश्यतेऽसावतिभयानक उद्देशः तथाहि—

अत्यन्तोद्धुरहस्तिमस्तकतटीसञ्चारिपञ्चाननः
शार्दूलोत्कटवक्त्रकृष्टहरिणीरक्तावसिक्तावनिः।
उच्छ्रायच्छुरितोडुमार्गशिखरो वैमानिकानामपि
व्योमोत्संगगतागतानि कुरुते वन्ध्यानि विन्ध्याचलः ॥ ९ ॥

अतो भवद्विधैः स्मर्तुमपि न शक्यते, किं पुनरतिपतितुम्।

चरः[3] — महाभाग! एवमस्तु। किं पुनर्नन्दिग्रामं गतेन मया कुमारभरतो वक्तव्यः।

दनुः — (सस्मितम्) यावदेतावतोऽध्वनः प्रतिलङ्घ्य पदातिर्भवान् नन्दिग्राममभिगमिष्यति तावद्रामभद्र एव जानकीं प्रत्याहृत्य स्वयं तत्रागमिष्यति।

---

'स्वामिनो वार्ता'. ख. ग. घ. ङ. ३. 'र – भवतु' घ.
'चामुद्धरन्' घ

चरः — युक्तमिदं, यतो नन्दिग्रामात् प्रस्थितस्य ममायं दशमो मासः। तदहं साधयामि । (निष्क्रान्तः)

दनुः — तदहमपि चिरकालपरित्यक्तमात्मनो लोकमभिगच्छामि। (ऊर्ध्वगमनमभिनीयाधो विलोक्य[1] सविस्मयम्) अहो प्लवङ्गममयी विलोक्यते विश्वतो विश्वम्भरा । आः ज्ञातम् ।

प्लवगपतिना सुग्रीवेण क्षणादमितो दिशो
दशमुखहृतां सीतादेवीं विचेतुमभीप्सता ।
विनतहनुमन्मुख्याः सख्या विभोः प्रणिचोदिता
विदधति महीमङ्गैस्तुङ्गैरमी हरियूथपाः ॥ १० ॥

(निष्क्रान्तः।)

इति शुद्धविष्कम्भः ।

---

(ततः प्रविशति रामो लक्ष्मणसुग्रीवौ च ।)

रामः — (सकरुणमात्मगतम्) हा देवि वैदेहि !

कनकरजतचित्रे तत्र दृष्टे कुरङ्गे
प्रकटितकुतुकानां प्रार्थनाकूतभाजाम् ।
मुहुरनुपतितानां तन्मुखे मन्मुखे च
प्रणयिनि तव मुग्धप्रेक्षितानां स्मरामि ॥ ११ ॥

सुग्रीवः — (स्वगतम्)

अन्येषु प्रियपूरणार्थिषु हरिश्रेष्ठेषु[2] तिष्ठत्स्वपि
प्रायच्छन्निजमङ्गुलीयकमसौ देवो यदीये करे ।

---

१. 'वालोक्यते' ख. ग. घ. ङ.

२. 'श्रे' क.

गत्वा तेन हनूमतैव नियत देवी निरीक्षिष्यते
भागिन्येर्यदृच्छयापि निपतत्यर्थे प्रभूणां मनः ॥ १२ ॥

लक्ष्मण — (सुग्रीवमवलोक्य स्वगतम्)

आर्यशरेण हरेणेवाग्रभवे कालकूट इव रूक्षे ।
ग्रस्ते वालिन्यमृतवदुद्भासत एष सुग्रीवः ॥ १३ ॥

(रामञ्च निर्वर्ण्य स्वगतम्) कष्ट भो कष्टम्

वियोगादार्याया चत् [1]तितपमान प्रथमतो
जटायोर्ध्वंसेन व्यथितमथ तातस्य सुहृदः ।
प्रियाया सव्यान समुपलभमानस्य च गुरो-
रिदानीमामूल हृदयमिदमुन्मूलितमिव ॥ १४ ॥

(सुग्रीव प्रति जनान्तिकम्) किष्किन्धाधिपते ! दुष्करमिवार्येण महति-
प्रत्यागमनावधिकमपि जीवितधारणमिति मे प्रतिभाति । तदन्यत्राक्षिप्यता-
मस्य चेतः ।

सुग्रीव — (जनान्तिकम्) सम्यगुपलक्षित कुमारेण । तथाहि —

स्वेदामृष्टललाटिकाभसितया नि श्वासवाताहति-
व्याधूतस्फुरदक्षसूत्रपटलीचीरोत्तरासङ्गया ।
रोमोच्छ्वाससृजा निजप्रियतमास्मृत्यायमत्यायत
नीतो नूतनसङ्गयेव सुधया कामप्यहो विक्रियाम् ॥ २५ ॥

तदहमन्यत्राक्षिपामि । (प्रकाशम्) देव !

---

१ 'म्) वियो' ग

निश्च्योतन्निर्झराम्भःशिशिरतरतटीनित्यनृत्यन्मयूर-
स्वेच्छोद्यच्छत्कलापावलिशबलरुचिव्यक्तवृत्रारिचापः ।
शुभ्रैराश्लिष्टसानुः शुचिपटरुचिरैः [1]शारदैर्वारिवाहै-
स्तुङ्गैरेष शृङ्गैरपिहितगगनो दृश्यतामृश्यमूकः ॥ १५ ॥

लक्ष्मणः — (सकौतुकम्) आर्य ! पश्य पश्य —

पशव्यानामस्मिन्नतिघनवनालीनिचुलिते
तृणानामश्नन्तः परिलघु पिबन्तश्च सलिलम् ।
प्रभावान्निःशङ्कं विदधति मतङ्गस्य तपसो
विमर्दं शार्दूलीनखकुलिशधारासु पशवः ॥ १६ ॥

रामः — (मनः संस्तभ्य) वत्स ! किमत्राश्चर्यम् । पश्य —

रागद्वेषविषादहर्षसुखितादुःखित्वमुख्यान्यपि
द्वन्द्वानि स्वयमान्तराणि वशिता[2]निघ्ना विनिघ्नन्ति ये ।
तेषामस्तरजस्तमस्कमनसामस्तोकसत्त्वश्रियां
धीराणामिह बाह्यमत्सरकलहप्रध्वंसने कः श्रमः ॥ १७ ॥

सुग्रीवः — देव ! एकमपि वस्तु विषयभेदाद् भिन्नफलमिवोपलभ्यते[3] । तथा हि —

क्षिप्तस्तेन पुरा मतङ्गमुनिना मत्पूर्वजं वालिने
यो दुःखाकृत माल्यवत्क्षितिभृतो दुर्लङ्घतापाततः ।
सोऽयं प्रत्युत मामनुग्रहपदे तिष्ठन् प्रतिष्ठार्पणा-
दस्मिन्नेव सुखाकरोच्चिरतरं शापोऽपि लाभोत्तरः ॥ १८ ॥

---

१. शारदाभ्रैरदभ्रैः. ग.
२. निघ्नानि निघ्नन्ति. घ.
३. ते । क्षिप्तस्तेन. ख. ग. घ. ङ.

लक्ष्मणः — [1] सखे सुग्रीव ! किं कारणमनेन मतङ्गमुनिना तथा प्रशप्तः शक्रसूनुः ।

सुग्रीवः — नन्वमुना दैवेन तदा पादाङ्गुष्ठेन यः परिवर्तितो[2] दुन्दुभेः कङ्कालकूटः स एव प्रथममस्य शापस्य कारणमासीत् ।

रामः — कुमार ! किं विस्मृतमिदं यत् पम्पामुल्लङ्घ्य माल्यवत्प्रस्थं सञ्चरन्तावावां प्रति भिक्षुवेषेण हनूमता निवेदितोऽयमपि प्रस्तावः ।

लक्ष्मणः — आ[3] एवमेतत् । स्मृतमिदानीं किन्तु सुग्रीवपक्षपातिनि हृदये वालिविषयो वृत्तान्तः शिथिलमेव मे लग्न आसीत् ।

रामः — वत्स ! किमुच्यते सुग्रीवपक्षपात इति, यदायत्तेन हि मया —

कक्षोपारुद्धरक्षोधिपभुजपटलीदुर्गतो निर्गताया
येन स्वस्मिन् द्विबाहावपि वसति मुदः पूरिता वीरलक्ष्म्याः ।
सोऽपि त्रैलोक्यहेलाविजयपटुमहाविक्रमः शक्रसूनु-
र्नीतो धिग् छद्मवृत्त्या निधनमधरितस्फारवीरव्रतेन ॥ १९ ॥

लक्ष्मणः — आर्य ! नैष दोषः । कुतः —

छद्मना न किमरण्यगोचरान् वागुरादिषु निपातितान् मृगान् ।
मारयन्ति मृगयासु धन्विनो येषु यो विधिरदोष एव सः ॥ २० ॥

सुग्रीवः — सत्यमाह कुमारः ।

शस्त्राशस्त्रिप्रधनकथनेऽप्यप्रगल्भाः प्रकृत्या
कृत्याकृत्यद्वितयभिदया कष्टमस्पृष्टचित्ताः ।
एते केचिद् वयमपि मृगाः किन्तु शाखामृगाख्याः
कोऽन्यो हिंसाविधिरनुपधिस्तावदेतादृशां नः ॥ २१ ॥

१. ध.-किं कारणमनेन मुनिना. ग.
२. त. स दुन्दुभेः कङ्कालकूट एव.
३. आर्य घ.

(नैपथ्ये)

सुग्रीवपक्षपातं वालिक्षपणं च निष्फलीकुर्वन् ।
वामो राम! विधिस्ते वज्रानलदुस्सहोऽभ्येति ॥ २२ ॥

(सर्वे श्रुत्वा विषादं रूपयन्ति।) (ततः प्रविशति मायावसुः।)

मायावसुः — (सशोकम्) हा आचार्य!

मृत्युं मर्त्यशरादपि स्म लभते मायामृगीभूय यः
सोऽपि श्लाघ्यतमो भवानधिगतः स्वार्थो यतः स्वामिना ।
प्रारम्भे घटिताः फले विघटिता यस्य प्रयत्ना इमे
तस्यैतस्य निरर्थकं मम परं मायावसोर्जीवितम् ॥ २३ ॥

(सावष्टम्भम्) अयमारिप्सितस्तु प्रयत्नो[1] न तथा भविष्यति ।

रामलक्ष्मणसुग्रीवान् कर्तृनत्र स्थितानिमान् ।
स्वयमेवोज्झितप्राणान् करिष्याम्येष[2] साम्प्रतम् ॥ २४ ॥

यावज्जानकी वार्ताहरो[3] न हनूमानागमिष्यति[4] तावच्चारणवेषमवलम्ब्य प्रस्तुतं प्रयोक्ष्ये[5] (इति तथा कृत्वोपसर्पति।)

सुग्रीवः — अये! अयं कोऽपि दिव्यः खतलादितोऽवतरति ।

(सर्वे उत्तिष्ठन्ति मायावसुः सुग्रीवपक्षपातमिति पूर्वोक्तमेव पठति।)

रामः —(सविषादं) भो महाभाग! अत्रोपविश्य ब्रूहि किमेतदिति ।

मायावसुः — (उपविश्य) ननु भवन्तोऽप्युपविशन्तु । सर्वं कथयिष्यामि वज्रहृदयः[6] । (सर्वे उपविशन्ति।)

---

१. त्न. फलिष्यत्येव. ख. ग. घ. ङ.
२. व. घ.
३. रो हनू. ग. ङ.
४. नागमिष्य. ख. ग. घ. ङ.
५. इति कृत्वैव लङ्कानगरात् सत्वरमागतोऽस्मि। (इति चारणवेषो भूत्वोपसर्पति।) ख. ग. घ. ङ.
६. वज्रमयः. क.

सुग्रीवः — महाभाग ! त्वरितमाचक्ष्व, पर्याकुला वयम् ।

मायावसुः — [1] अहं तावद्वज्राङ्गदो नाम चारणो भगवता पुत्रविपत्तिमाकर्ण्य दीर्णहृदयेनेव विमुक्तकण्ठमाक्रन्दता संक्रन्दनेन समादिष्टोऽस्मि ।

सुग्रीवः — किमिति ।

मायावसुः — भद्र वज्राङ्गद !

अस्मद्द्रोहिनिशाचरक्षपणतः क्षेमंकरो नश्चिरं
रामः काममिदन्तु[2] कर्म नितरां निर्माति मर्मव्यथाम् ।
दाराणां हरणादरिः स्फुटमनेनोपेक्षितो रावण-
स्तं जित्वात्मसुहृद् भवन्नपि हतो वालीति कोऽयं क्रमः[3] ॥ २५ ॥

तन्नियतमाधुनिकैः[4] कैश्चन कूटसुहृद्भिः प्रतारितेन प्रकृतिसरलचेतसा तेनेदमाचरितं स्यात् । भवत्वर्धासनसुहृदं महाराजदशरथमपेक्ष्यैतदस्य साहसं [5]सहिष्यामहे । किञ्च –

पितृव्यपरिलालितो विहितयौवराज्यच्छलात्
पितृव्ययशुचं जहद्वसति मे स नप्ताङ्गदः ।
न वेद नवधीरसौ निभृतवैरमेषां मनो
मनागपि पितृद्रुहां दहनगर्भभस्मोपमम् ॥ २६ ॥

सुग्रीवः — (स्वगतम्) हहह ! दारुणोऽयं मर्मणि प्रहारः ।

लक्ष्मणः — (स्वगतम्) नियतमेष कश्चिन्मायावी प्रलपति । कथन्नाम तादृग्गम्भीरस्तत्रभवान् अखिलकर्मसाक्षी भगवान्महेन्द्रः ईदृशमतिप्रलघुकं[6] वचनमभिधत्ताम् । भवतु सर्वमग्रे स्फुटीभविष्यति । (प्रकाशम्) ततस्ततः ।

---

१. सुः श्रूयताम् अहं. ख. ग. घ. ङ.
२. न्तु नाम नितरा. घ.
३. मः । नियत.
४. तरळ. ग.
५. सहामहे. ग.
६. दगति. ग.

मायावसुः — तद्गत्वा कुमारमङ्गदमविलम्बितमस्मत्सन्निधिमुपानय[1]। अत्र हि—

गाङ्गे गाङ्गेयपद्मच्युतमधुमधुरे स्वैरपेयेऽपि तोये
स्वेच्छाभोग्येऽपि कल्पद्रुम[2]फलनिकरे निष्फलं दुष्प्रभूणाम्।
अल्पग्रामाधिपत्यादवनिपरिवृढम्मन्यमन्योन्यकृष्टि-[3]
क्लिष्टश्रीकं किमर्थं कुलमनुवलते वालिशो वालिसूनुः ॥ २७ ॥

इति।

सुग्रीवः — (लक्ष्मणं प्रति जनान्तिकम्) कुमार! भगवता पुरन्दरेण नितरामुपालब्धाः स्मः।

लक्ष्मणः — (जनान्तिकम्) नैतदुपपद्यते। पश्य —

परस्त्रीपुत्रस्य स्थितिमनुजदाराभिगमनात्[4]
सतां भिन्दानस्य क्षितिपकुलदम्यस्य दमनात्।
स्वयं धर्माध्वन्यः स खलु भगवानध्वरभुजा-
मधीशः शक्रोऽपि व्यथत इति सम्भावयति कः ॥ २८ ॥

भवतु सर्वथा श्रोष्यामस्तावत्[5]।

सुग्रीवः — भद्र वज्राङ्गद! ततस्ततः।

मायावसुः — ततोऽहं तथेत्यभिधाय किष्किन्धामनुप्राप्य कुमारमङ्गदं विचिन्वानस्तत्रभवत्या तारयाभिहितोऽस्मि।

वञ्चितां दशमुखेन विचेतुं वल्लभां रघुपतेः किल सीताम्।
नन्दनो मम पितृव्यनि[6]देशाद्दक्षिणां दिशमगात् कपिसैन्यैः ॥ २९ ॥

---

१. दमस्मत्सन्निधि. ग.
२. मतल.
३. न्यमानोऽन्यकृष्टि. ग.
४. हरणात् ख. घ.
५. तु। (प्रकाशम्) भद्र! ततस्तत.. क.
६. नियोगाद्दक्षिणा. ग.

